हतवानिति भूते प्रयोगः । ब्रह्मादिषु भूतार्थाद्धन्तेः क्विबेवेतिकालनियमे पितृव्यं हतवान् पितृव्यघातीति भूतेऽपि प्रत्ययान्तरविशिष्टः प्रयोगः । ब्रह्मघातीति प्रयोगाभावो नियमफलं बोध्यम् । **द्विविधो नियम इति भाष्यमिति** । तथाच भाष्यमुभयतोऽयं नियमः ब्रह्मादिष्वेव क्विबेवेति च । युक्तञ्चैतत् श्रुत्योपस्थितोपपदप्रत्यययोरुपरोधापेक्षया प्रकरणलक्षणजघन्यप्रमाणोपस्थितधातुकालयोरेवोपरोधो न्याय्यः । एकञ्चैतद्भाष्यविरोधात्पूर्वोक्तमयुक्तमित्यलम् ॥

ननु घृपधातोराकारेत्संज्ञकत्वेन 'विभाषाभावादिकर्मणोरि'ति विकल्पे प्राप्ते तदंशे नित्यार्थो विधिः स्यात् ततश्च भावादिकर्मभ्यामन्यत्र वैयात्याऽभावेऽपि 'आदितश्चे'तिनिषेध एव स्यादत आह—**भावादिकर्मणोस्तु वैयात्ये धृषिर्नास्तीति** । अनभिधानादिति भावः । अत्र प्रमाणमाह—**अत एव नियमार्थमिति** । तेन भावादिकर्मभ्यामन्यत्र वैयात्याभावेऽपि न 'आदितश्चे'ति निषेधः । **हरदत्त इति**-अवैयात्ये भावादिकर्मणोरनभिधानाद्वैयात्ये च नियमादादित्वस्य साफल्यमस्त्येवेत्यभिप्रेत्याह-**माधवस्तु भावादिकर्मणोरवैयात्ये विकल्पमाहेति** ॥

ननु 'द्वेचे'त्यनेन द्वित्वे कृतेऽपि प्रत्यासत्त्या षाष्ठद्वित्व एवाभ्याससंज्ञाप्रवृत्त्याऽऽष्टमिके तदप्रवृत्त्या स न स्यादत आह—**दृशिग्रहणादभ्याससंज्ञेति** ॥

इति पूर्वकृदन्तप्रकरणम् ।

---

# अथोत्तरकृदन्तप्रकरणम् ।

ननु उणादयो बहुलमित्यत्रत्यबहुग्रहणस्याऽपरिपूर्णोणादिपरिपूर्णार्थकस्य फलं प्रदर्शयति—**केचिदविहिता अपीति** । केचिदनुक्ता अपि धातवः प्रत्ययाश्चोणादिषु ऊह्याः तर्कणिया इत्यर्थः । तथाहि, शकुलेति प्रयोगदर्शनात् हृषेरुलजितिसूत्राद्विहित उलच्प्रत्ययः शकिधातोरपि भवतीति । किञ्च कुत्राप्यविहितयोः फिडफिड्डप्रत्यययोर्रतिः प्रकृतिरूह्यते तयोः कित्वञ्च प्रकल्प्यते । तथा षण्ढ इत्यत्र सत्वाभावश्चोह्यते ।

ननु द्वन्द्वान्ते श्रूयमाणपदस्य प्रत्येकमभिसम्बन्धस्य प्रसिद्धत्वेन शकधृषेति सूत्रस्थार्थग्रहणस्य तत्सूत्रस्थपदेष्वन्वयः स्यादित्यशंक्य समाधत्ते—**अर्थग्रहणमस्तिनैव सम्बध्यत इति** । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेतिन्यायेनाऽनन्तरेणास्तिनैवार्थग्रहणस्य सम्बन्धो नतु शकादिभिरिति भावः ।

**पर्यायोपादानमर्थोपलक्षणार्थमिति**—ननु कालशब्दोपादानादेव समयवेलाशब्दाभ्यामपि तुमुन्सिद्धौ पर्यायोपादानं व्यर्थमिति चेन्न । तस्याऽर्थोपलक्षणार्थत्वेन सार्थक्यात् । तथा च कालसमयवेलार्थेषूपपदेषु तुमुन्नित्यर्थेऽनेहाशब्दादपि तुमुन्सिद्धः ।

ननु स्थस्थिर इति सूत्रेऽण्यन्तस्य सरतेरुपादानादतीसारो व्याधिरिति प्रयोगो नोपपद्येतेत्यत आह—**अन्तर्भावितण्यर्थोऽत्र सरतिरिति**-अतीसार इत्यत्रोपसर्गेकारस्य 'उपसर्गस्य घञ्यमनुष्येबहुलमि'त्यनेन दीर्घः ।

ननु श्रमेरुदात्तोपदेशत्वान्मान्तत्वाच्च 'नोदात्तोपदेशस्य मान्तस्याऽनाचमेरि'ति वृद्धि-

निषेधे विश्रम इति प्रयोगे न स्यादत आह—विश्राम इति त्वपाणिनीयमिति—श्रमेर्णि-जन्तादच् विधाने तु विश्राम इति प्रयोगःसाधुरेव भवितुमर्हति, अत एव धुर्यान्विश्रामयेति स इति रघुकाव्यपद्यसङ्गतिः । नच णिच्यपि वृद्धिनिषेधः स्यादितिवाच्यम् । नोदात्तोपदेशेत्यत्र कृतीत्यस्यानुवर्तनेन णिचि वृद्धिनिषेधाप्राप्तेः । 'मितां ह्रस्व' इति ह्रस्वोऽपि नाशङ्क्यः । वेत्यनुवर्तनाद्व्यवस्थितविभाषाश्रयणेन ह्रस्वाभावात् । एवं चोक्तरीत्या प्रयोगस्य साधुत्वेऽप्यर्थभेदः स्यादेव । वस्तुतस्तु—निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिति विवक्षायां न दोष इति भावः ।

ननु 'श्रिणीभुवोऽनुपसर्गे' इति सूत्रेऽनुपसर्गपदसत्त्वादनुपसर्गाद्भुवो घञो विधानादुपसर्गात्ततो घञोऽविधानात्प्रभाव इति प्रयोगो न स्यादित्यभिप्रेत्य शंकते—कथं प्रभावो राज्ञ इति । समाधत्ते—प्रकृष्टो भाव इति । प्रादिसमास इति । अनुपसर्गाद्भुवो घञ्विधानेन भाव इति संसाध्य पश्चात्प्रशब्देन सह प्रादिसमासे प्रभाव इति प्रयोगोपपत्तिरिति भावः ।

ननु श्रिणीभुव इति सूत्रेण नयतेर्घञि नाय इत्यस्य साधुत्वे नय इति न स्यात् तथा च वक्ष्यमाणप्रयोगो विरुध्येतेत्याह—कथं राज्ञो नय इति । समाधत्ते—बाहुलकादिति । सूत्रे बहुलग्रहणानुवृत्त्या घञो वैकल्पिकत्वेनोक्तप्रयोगसिद्धिरिति भावः ।



इति ठक्कुरोपनामकश्रीकनकलालशर्मणः कृतौ फक्किकारत्नमञ्जूषाया
कारकादिकृदन्तान्तो द्वितीयः खण्डः समाप्तः ॥

---

चतुर्थ संस्करणम् )



( विद्याविलास यन्त्रालये मुद्रितम् )

सर्वविधपुस्तकप्राप्तिस्थानम्—

श्रीहरिकृष्णनिबन्धभवनम्

बनारस सिटी ।

॥ श्रीः ॥

# प्रौढमनोरमा

महामहोपाध्याय–श्रीभट्टोजीदीक्षित–विरचिता ।



महामहोपाध्याय-श्रीहरिदीक्षितविरचित--लघुशब्दरत्नव्याख्यासमेता

महामहोपाध्यायश्रीभैरवमिश्रविरचित–शब्दरत्नव्याख्यया, लवपुरीय-

प्राच्यमहाविद्यालयप्रधानाध्यापकवेदान्त--व्याकरणाचार्य-साहित्य–

मीमांसातीर्थमहामहोपाध्यायश्रीमाधवशास्त्रिभाण्डारीविरचित–

**प्रभानामकटिप्पण्या,** आयुर्वेद–व्याकरणाचार्य–

साहित्यतीर्थ–धर्मशास्त्रशास्त्रिपदवीकश्रीयुतपण्डितजग-

न्नाथशास्त्रिकृतयाऽव्ययीभावप्रकरणस्थ–शब्द-

**रत्नप्रदीपकनामकटिप्पण्या**

च समलङ्कृता ।

---

विद्वद्वृन्द ।

आप लोगों को यह सूचित करते अत्यन्त हर्ष होता है कि उपरोक्त मनोरमा शब्दरत्न तथा भैरवी व्याख्याके साथ वेदान्त–व्याकरणाचार्य–साहित्य–मीमांसातीर्थ म० म० श्रीयुतपं०माधवशास्त्री भाण्डारी विरचित प्रभाटिप्पणी तथा अनेकशास्त्र के विद्वान् श्रीयुत पं० जगन्नाथशास्त्रीजी कृत अव्ययीभावप्रकरण पर शब्दरत्न प्रदीपक नामक टिप्पणी से अलङ्कृत होने से यह संस्करण इतना सुन्दर तथा परीक्षोपयोगि हुआ कि सीर्फ अल्प समय में ही प्रथम संस्करण हाथो हाथ बिकगया, इस परिवर्धित द्वितीय संस्करण में व्याकरणशास्त्र के परम विद्वान पं० सदाशिवशास्त्रिकृत "विभा" नामकी टिप्पणी भी नवीन दी गई है। ग्रन्थ अत्यन्त उत्तम नवीन, अक्षरों से ग्लेज़ चिकने मोटे कागज पर छपा है । मूल्य भी अल्प केवल ४) है। विद्यार्थियों को कमीशन काट कर ३।) में दिया जायगा ।

---

सर्वविधपुस्तकप्राप्तिस्थानम्—

श्रीहरिकृष्णनिबन्धभवनम्